प्रभृतीनां ब्रह्मसाक्षात्कारवतां सद्यो न जीविता भवेत् श्रूयंते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता महाकल्पसमयांतजीविता च ह्येते महाधियो न ब्रह्मविदः ब्रह्मविदश्चाल्पपुण्ययशसो मनुष्या इति संभवति तस्मादागमानुसारेण प्रारब्धकार्य्याणां सत्यपि तत्त्वसाक्षात्कारेऽवस्थानं युक्तमिति भावः। ननु यदि तस्य तावदेव चिरमिति प्रारब्धकर्मावस्थानंप्रतिपादिकश्रुत्यंतरवशात् क्षीयन्ते चास्य कर्माणीति सामान्यश्रुतेरनारब्धकार्य्यपरत्वं तर्हि यथापुष्करपलाश आपो न श्लिष्यंते एवं ह्यस्य सर्वे पाप्मानः प्रदूयंते इति विशेषश्रवणात्सामान्यवचनं पापे कर्मविशेषे उपसंहरणीयं किंचाधर्मस्य रागादिनिबंधनतया शास्त्रीयेन ब्रह्मज्ञानेन विनाशो युक्तः धर्मब्रह्मज्ञानयोस्तु शास्त्रीयत्वेन ज्योतिष्टोमदर्शपूर्णमासवदविरोधान्नोच्छेद्योच्छेदकभावः। अन्यथाऽनुत्पन्नफलस्यापि धर्मस्य नाशे स्वर्गादिसाधनत्वप्रतिपादिकज्योतिष्टोमवाक्यस्याप्रामाण्यापत्तिः। तस्माद्दुष्कृतमेव संचितं कर्मज्ञानविनाश्यमित्याशंक्य नहि पापस्य संचितपापत्वप्रयुक्तं विद्या निवर्त्यत्वं ॥

म०प्र०—श्रुतिस्मृतिभ्यां—तस्य तावदेवाचिरं यावन्न विमोक्ष्ये नाभुक्तंक्षीयते इत्यादि श्रुति स्मृतिभ्यां, प्रतीक्षावगमेन—स्थितेरवगतत्वेन, अन्यथा—अनारब्धकार्य्याणामेव सुकृतदुष्कृतकर्मणां विद्यासामर्थ्याद्विनाशानभ्युपगमे किंतु सर्वकर्मनाशस्वीकारे न, श्लिष्यंते—क्लेदनादिरूपं स्वकार्य्यं न कुर्वंति, प्रदूयंते—पापकर्मणा फलसंबंधाभावेन नश्यंति ॥

मू०—संचितं द्विविधं सुकृतं दुष्कृतं चेति तथाच श्रुतिः "तस्य पुत्रा दायमुपयांति सुहृदःसाधुकृत्यं द्विषंतः पापकृत्यम्" इति ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्य्यप्रारब्ध कर्मणोपि निवृत्तेः कथं ज्ञानिनो देहधारणमुपपद्यते इति चेन्नाप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकतया प्रारब्धकर्मरूप प्रतिबंधकदशायामज्ञाननिवृत्तेरनंगीकारात्। नन्वेवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वमुक्तिः स्यात् अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगादितिचेन्न इष्टापत्ते रित्येके ॥

वरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपगमात् । नैकमुक्तौ सर्वमुक्तिः, अत एव च यावदधिकारमवस्थितिराधिकारिकाणामित्यस्मिन्नधिकरणेऽधिकारिपुरुषाणामुत्पन्नतत्वज्ञानानामिंद्रादीनां देहधारणानुपपत्तिमाशंक्याधिकारापादकप्रारब्धकर्मसमाप्त्यनंतरं विदेहकैवल्यमिति सिद्धांतितं तदुक्तमाचार्य्यवाचस्पतिमिश्रैः ॥

उपासनादिसंसिद्धितोषितेश्वरचोदितम् ॥
अधिकारं समाप्यैते प्रविशंति परंपदमिति ॥
एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षेनोपपद्यते ॥

शि०म०—ननु कस्यापि मुक्त्यभावे शुकवामदेवादिमुक्तिप्रतिपादिकश्रुतिस्मृतिविरोध इत्यरुच्या मतांतरमाह (अपरेत्विति) ननु लाघवसहकृतानुमानानुगृहीताजामित्येकवचनश्रुतिविरोधान्नाविद्यानानात्वं मायाभिरिति बहुवचनश्रुतिस्तद्गतशक्तिभेदमादायैवोपपन्ना नचोक्तदोषभयात्तन्नानात्वं वक्ष्यमाणरीत्या तद्दोषनिरासासंभवादित्यस्वरसात्समाधानांतरमाह (अन्येत्विति) एवमुक्तौ न सर्वमुक्तिरित्येतत्सूत्रकारवचनेनापि द्रढयति (अतएवेति) नन्वेतत्सूत्रमन्यपरं कल्प्यतामित्यत आह (तदुक्तमिति) तथाचैकमुक्तौ सर्वमुक्तिरित्यभ्युपगतावेतदधिकरणविरोधो दुर्वार इत्याह (एतच्चेति) नन्वेकाविद्यागतनानाशक्त्यभ्युपगंतृमतेप्येकमुक्तौ सर्वमुक्तिरेव इयमावरणशक्तिर्निवर्त्या इयंनेत्यत्र नियामकाभावेन ब्रह्मसाक्षात्कारात्सर्वावरणशक्तिविशिष्टाविद्याविनाशावश्यंभावादित्याशंक्य ॥

म०प्र०—(लाघवसहकृतानुमानेनि) एकाविद्ययैवसर्वकार्यसंभवेपि यदि नानाविद्यास्वीकरणं तदा गौरवमिति लाघवतर्कसहकृतविवादास्पदप्रपंच आविद्यकः मिथ्यात्वाच्छुक्तिरजतादिवदित्यनुमानेत्यर्थः। तद्गतेनि—मायागनेत्यर्थः (उक्तदोषेति) एकमुक्तौसर्वमुक्त्यापत्तिरूपदोषेत्यर्थः। वक्ष्यमाणरीत्या—तस्या एवाविद्याया इत्यादिपरममूलोक्तप्रकारेण, तद्दोषेति—एकमुक्तौ सर्वमुक्त्यापत्तिरूपदोषेत्यर्थः। परममूले (अतएवेति) एकमुक्तौसर्वमुक्त्यभावादेवेत्यर्थः। अन्यपरं—अनुत्पन्नतत्त्वज्ञानपरं । तथाच—अनुत्पन्नतत्त्वज्ञानपरत्वाभावे, परममूले (एतच्चेति) यावदधिकारमवस्थितिरित्याद्यधिकरणमित्यर्थः ॥

मू०—तस्मादेकाविद्या पक्षेपिप्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया तदेवं ब्रह्मज्ञानान्मोक्षः स चानर्थनिवृत्तिर्निरतिशयब्रह्मानंदावाप्तिश्चेति सिद्धं प्रयोजनम् ॥

इति श्रीधर्मराजदीक्षितविरचितायां वेदांतपरिभाषायामष्टमःपरिच्छेदः ॥

शि०म०—यथाशुक्तिसाक्षात्कारात्फलबलेनैकावरणशक्तिनाशः यथा सर्वज्ञानप्रागभावनिवृत्तिस्वरूपयोग्येन ज्ञानेन कस्यचिदेवप्रागभावस्य निवृत्तिरेवमन्येन प्रपंचोपलंभानुरोधेनयस्य ब्रह्मज्ञानं तदीयानर्थहेत्वावरणशक्तेरेव नाशो नान्यदीयसंसारहेत्वावरणशक्तीनामिति व्यवस्थोपपद्यत इत्याह ( तस्मादिति ) परिच्छेदप्रतिपाद्यमर्थं निगमयति ( तदेवमिति ) ॥

प्रमादलिखितं त्यक्तं प्रमादालस्यदोषतः ॥
तत्क्षंतव्यं बुधैः सद्भिः क्षमा हि विदुषां धनम् ॥ १ ॥
सुवर्णखचिताकाराकृतिरेषा मया कृता ॥
विदुषामस्तु वेदांतशिखामणिरलंक्रिया ॥ २ ॥
अनेन मत्प्रबंधेन वेदांतार्थावलंबिना ॥
गुरुकारुण्यलब्धेन तारकं ब्रह्म तुष्यतु ॥ ३ ॥
वंदेहं वंदनीयानां वंद्यां वाचामधीश्वरीम् ॥
कामिताशेषकल्याणकलनाकल्पवल्लरीम् ॥ ४ ॥

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजरामकृष्णाध्वरिविरचिते वेदांतशिखामणौ अष्टमः परिच्छेदः ॥ ८ ॥

---

म०प्र०—फलबलेन—कालांतरीयरजतभ्रांतिबलेन, स्वरूपयोग्येन—कारणतावच्छेदकज्ञानत्वरूपधर्माक्रांतेन ( सुवर्णेति ) सुवर्णखचितभूषणमिवाकारो यस्याः सा तथा मया कृता एषा वेदांतशिखामणिः कृतिर्विदुषामलंक्रिया भूषणक्रियाऽस्त्विति योजना । अशेषकल्याणकलनाकल्पवल्लरीम्—सकलसुखप्राप्तिहेतुकल्पवृक्षलताम् ॥

जातंयतो विश्वमिदं तु यस्मिन्स्थित्वा लयं याति भवांतकाले ॥
तं योगिवर्यं मुनिभिः प्रतीक्ष्यं श्रीनानकार्यं प्रणमामि नित्यम् ॥ १ ॥
भवदावाग्निसंतप्तानुद्धर्तुमिच्छया जनान् ॥
माययोपात्तकायं तं भजे श्रीचंद्रमीश्वरम् ॥ २ ॥

येभ्यो मया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥
कायेन वाचा मनसापि वंदे श्रीमद्गुरूणां चरणारविंदम् ॥ ३ ॥
यद्गीस्तुपूषेवतमोनिहंति मोहं परानंदसमूहदोग्ध्री ॥
विद्यागुरूंस्तान्सततं नमामः श्रीब्रह्मविज्ञानपदाभिधेयान् ॥

इति श्रीमदुदासीनवरश्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां धर्मराजाध्वरींद्रात्मजरामकृष्णाभिधेयविरचितवेदांतशिखामणेः प्रभायामष्टमः परिच्छेदः ॥ ८ ॥



पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालयाध्यक्ष-मुंबई.